समीपे बालकं निक्षिप्य गन्तुमनुचितमिति कुमारोऽप्यानायीति[1] । तस्मि-न्नेव क्षणे वन्यो वारणः कश्चिददृश्यत । तं विलोक्य भीता सा बालकं निपात्य[2] प्राद्रवत् । अहं समीपलतागुल्मके प्रविश्य परीक्षमाणोऽतिष्ठम् । निपतितं बालकं पल्लवकवलमिवाददति[3] गजपतौ कण्ठीरवो भीमरवो[4] महाग्रहेण[5] न्यपतत् । भयाकुलेन दन्तावलेन झटिति वियति समुत्पात्य-मानो[6] बालको न्यपतत् । चिरायुष्मत्तया[7] स चोन्नततरुशाखासमासीनेन वानरेण केनचित् पक्वफलबुद्ध्या[8] परिगृह्य फलेतरतया[9] विततस्कन्धमूले[10] निक्षिप्तोऽभूत् । सोऽपि मर्कटः क्वचिदगात्[11] । बालकेन सत्त्वसंपन्नतया[12] सकलक्लेशसहेनाभावि[13] । केसरिणा करिणं निहत्य[14] कुत्रचिदगामि[15] । लतागृहान्निर्गतोऽहमपि तेजःपुञ्जं बालकं शनैरवनीरुहादवतार्य[16] वना-न्तरे वनितामन्विष्य विलोक्यैनमानीय गुरवे निवेद्य[17] तन्निदेशेन भवन्नि-कटमानीतवानस्मीति ।

—दशकुमारचरितम्

---

१ **आनायि**—आ+नी ( १ प. ) या धातूचें तृतीय भूत० चें कर्मणि तृ. पु. चें एक व०. 'आणिला गेला'. २ **निपात्य**—नि+पत् (१ प.) या धातूच्या प्रयोजकाचें ल्यबन्त, 'टाकून देऊन.' ३ **आददति**—आ+दा ( ३ प. ) या धातूचें वर्त० धातु० विशेषण पुं. स. चें एक व०, 'घेत असतांना'. ४ भीमः (भयंकर) रवः ( आवाज )यस्य सः । बहु०. ५ महता ग्रहेण ( =आवेशेन ) । ६ **समुत्पात्यमानः**—सम्+उद्+पत् ( १ प. ) या धातूच्या प्रयोजकाचें वर्त० कर्मणि धातु० विशे० पुं. प्र. चें एक व०. 'फेंकला जाणारा'. ७ चिरायुष्मत्तया—दीर्घायुष्य असल्यामुळें. ८ पक्वस्य फलस्य बुद्ध्या = पक्वं फलं किमपि एतद् इति भ्रान्त्या । ९ फलेतरतया = फलात् इतरत् (दुसरें, निराळें) इति दृष्ट्वा । १० वितते (विस्तृत) स्कन्धस्य (झाडाचा बुंधा) मूले । ११ **अगात्**—इ (२ प.) या धातूचें तृतीय भूत० चें तृ. पु. चें एक व०. १२ सत्त्वसंपन्नतया = सामर्थ्ययुक्त असल्यामुळें. १३ **अभावि**—भू ( १ प. ) धातूचें तृतीय भूत० चें कर्मणि तृ. पु. चें एक व०. बालकेन °सहेन अभावि = बालकः °सहः अभूत् । १४ **निहत्य**—नि+हन् ( २ प. ) या धातूचें ल्यबन्त अव्यय. १५ **अगामि**—गम् ( १ प.) या धातूचें तृतीय भूत० चें कर्मणि तृ. पु. चें एक व०. केसरिणा अगामि = केसरी अगमत् । १६ **अवतार्य**—अव+तॄ. (१ प.) या धातूच्या प्रयोजकाचें ल्यबन्त अव्यय. १७ **निवेद्य**—नि+विद ( २ प. ) या धातूच्या प्रयोजकाचें ल्यबन्त अव्यय.

## ११. अपत्यहीनां [1]देवीमुद्दिश्य[2] राज्ञ उपदेशः

देवि, किमत्र क्रियतां दैवायत्ते[3] वस्तुनि। अलं रुदितेन। न वयमनुग्राह्याः प्रायो देवतानाम्। आत्मजपरिष्वङ्गामृतास्वादसुखस्य नूनमभाजनमस्माकं हृदयम्। अन्यस्मिञ्जन्मनि न कृतमवदातं कर्म। जन्मान्तरविहितं हि कर्म फलमुपनयति पुरुषस्येह जन्मनि। न हि शक्यं दैवमन्यथा[4] कर्तुमभियुक्तेनापि। यावत्[5] तु मानुष्यके शक्यमुपपादयितुं[6] तावत् सर्वमुपपाद्यताम्। अधिकां कुरु देवि गुरुषु भक्तिम्। द्विगुणामुपपादय देवतासु पूजाम्। ऋषिजनपरिचर्यासु दर्शितादरा[7] भव। परं हि दैवतमृषयो यत्नेनाराधिता यथासमीहितफलानामतिदुर्लभानामपि दातारो भवन्ति। श्रूयते हि पुरा चण्डकौशिकप्रसादान्मगधेषु बृहद्रथो नाम राजा जनार्दनस्य जेतारमतुलबलपराक्रमं जरासन्धं नाम तनयं लेभे। दशरथश्च राजा परिणतवया[8] अपि विभाण्डकमहामुनिसुतस्यर्ष्यश्रृङ्गस्य प्रसादान्नारायणभुजानिवाप्रतिहतानुदधीनिवाक्षोभ्यानवाप चतुरः[9] पुत्रान्। अन्ये च राजर्षयस्तपोधनानाराध्य पुत्रदर्शनामृतस्वादसुखभाजो बभूवुः। अमोघफला हि महामुनिजनसेवा। अहमपि खलु कदा समुपारूढगर्भभरालसाम्[10] आपाण्डुर[11]-

---

१ देवी = राणी. २ **उद्दिश्य**—उद्+दिश् ( ६ प. ) या धातूचें ल्यबन्त अव्यय, 'उद्देशून'. ३ दैवे आयत्ते—दैवाच्या स्वाधीन असलेल्या (गोष्टींत). **आयत्त**—आ+यत् ( १ आ. ) या धातूचें कर्मणि भूत० धातु० विशे०. ४ अन्यथा कृ ( ८ उ. )—बदलणें, उलट करणें. ५ **यावत्** = जें (सर्व), जितकें. ६ **उपपादयितुम्** ( = कर्तुम् )—उप+पद् ( ४ आ. ) या धातूच्या प्रयोजकाचें तुमन्त अव्यय. ७ दर्शितः आदरः यया। बहु०. **दर्शित**—दृश् ( १ प. ) या धातूच्या प्रयोजकाचें कर्म० भूत० धातु० विशे०. ८ परिणतं ( उतार ) वयः यस्य सः बहु०. ९ चतुरः—चतुर् ( चार ) या शब्दाचें द्वि. चें बहु०. १० समुपारूढस्य गर्भस्य भरेण अलसाम्।—पूर्ण वाढ झालेल्या गर्भाच्या भारानें जड झालेली. **समुपारूढ**—सम्+उप+आ+रुह् ( १ प. ) या धातूचें कर्म० भूत० धातु० विशेषण. ११ आ ( ईषत्—थोडेंसें ) पाण्डुरं ( फिकट ) मुखं यस्याः ताम्। बहु०

मुखीमासन्नचन्द्रोदयामिव पौर्णमासीनिशां देवीं द्रक्ष्यामि। कदा मे तनयजन्ममहोत्सवानन्दनिर्भरो हरिष्यति पूर्णपात्रं परिजनः। कदा हारिद्रवसनधारिणी[1] सुतसनाथोत्सङ्गा[2] द्यौरिवोदितरविमण्डला सबालातपा[3] मामानन्दयिष्यति देवी। कदा सर्वौषधिपिञ्जरजटिलकेशो[4] गोरोचनाचित्रितकण्ठसूत्रग्रन्थिरुत्तानशयो[5][6] दशनशून्यस्मिताननः पुत्रको जनयिष्यति मे हृदयाह्लादम्। कदा गोरोचनाकपिलद्युतिरन्तःपुरिकाकरतलपरंपरासंचार्यमाणमूर्तिरशेषजनाभिनन्दितो[7] मङ्गलप्रदीप इव मे शोकान्धकारमुन्मूलयिष्यति चक्षुषोः। कदा च क्षितितलरेणुधूसरो मण्डयिष्यति मम हृदयेन दृष्टया च सह परिभ्रमन् भवनाङ्गनम्। कदा केसरिकिशोरक इव संजातजानुचङ्क्रमणारम्भः[8] संचरिष्यतीतस्ततः स्फटिकमणिमयभित्त्यन्तरितान्[9] भवनमृगशावकानाजिघृक्षुः[10]। कदान्तःपुरिकानूपुरनिनादसंगतान्[11] गृहकलहंसकाननुसरन् कक्षान्तरप्रधावितः कनकमेखलाघण्टिकारवानुसारिणीमायासयिष्यति[12] धात्रीम्। कदा

---

१ हारिद्रं (हरिद्रया रक्तम्—हळदीनें रंगविलेलें) वसनं (वस्त्र) धारयति इति उप० त. २ सुतेन सनाथः (युक्त) उत्सङ्गः (मांडी) यस्याः सा। बहु०. ३ बालेन (नुकत्याच उगवलेल्या सूर्याच्या कोवळ्या) आतपेन (उन्हानें) सह। बहु०. ४ सर्वौषधिभिः (सर्वौषधि नांवाच्या वनस्पति लावून) पिञ्जराः (पिंगट) जटिलाः (जटायुक्त) केशाः यस्य सः। बहु०. ५ गोरोचनया चित्रितः (रंगविलेली) कण्ठसूत्रस्य ग्रन्थिः यस्य सः। बहु०. ६ उत्तानः शेते इति—उताणा निजणारा. ७ अन्तःपुरिकाणां (अन्तःपुरांतील स्त्रियांच्या) करतलानां परंपरया संचार्यमाणा मूर्तिः यस्य सः। बहु०. **संचार्यमाण** (घेतली जाणारी)—सं+चर् (१ प.) या धातूच्या प्रयोजकाचें कर्मणि वर्त० धातु० विशेषण. ८ संजातः जानुभ्यां चङ्क्रमणस्य आरम्भः यस्य सः। बहु०. **चङ्क्रमणम्**—क्रम् (१,४ प.) या धातूचें पौनःपुन्यार्थक नाम, 'वारंवार फिरणें'. ९ स्फटिकमणिमयाभिः भित्तिभिः अन्तरितान्।—स्फटिकांच्या भिंतींमुळें दूर असलेले (भिंतींच्या पलीकडच्या बाजूला असलेले). १० **आजिघृक्षुः**—आग्रहीतुम् इच्छुः। आ+ग्रह् (९ उ.) या धातूपासून इच्छार्थक विशे०. ११ **संगतान्**—एकत्र आलेले. १२ **आयासयिष्यति** (त्रास देईल)—आ+यस् (४ प.) या धातूच्या प्रयोजकाचें द्वितीय भविष्य० चें तृ. पु. चें एक व०.

मातुश्चरणरागोपयुक्तशेषेण[1] पिण्डालक्तकरसेन[2] कञ्चुकिनां विडम्बयिष्यति[3] मुखानि। कदा कुतूहललोललोचनो मणिकुट्टिमेष्वधोदत्तदृष्टिरनुसरिष्यति स्खलद्गतिरात्मनः[4] प्रतिबिम्बानि। कदा नरेन्द्रसहस्रप्रसारितभुजयुगलाभिनन्द्यमानागमनो भूषणमणिमयूखलेखाकुलीक्रियमाणलोलदृष्टिरास्थानस्थितस्य[5] मम पुरः पर्यटिष्यति सभान्तरेषु। इत्येतानि चान्यानि मनोरथशतानि चिन्तयतोऽन्तःसंतप्यमानस्य यान्ति रजन्यः। मामपि दहत्येवायमहर्निशमनल इवानपत्यतासमुद्भवः शोकः। शून्यमिव मे प्रतिभाति जगत्। अफलमिवाखिलं पश्यामि जीवितं राज्यं च। अप्रतिविधेये तु विधातरि[6] किं करोमि। तन्मुच्यतां देवि शोकानुबन्धः। आधीयतां धैर्ये धर्मे च धीः। धर्मपरायणानां हि सदा समीपसंचारिण्यः कल्याणसंपदो[7] भवन्ति। एवमभिधाय सलिलमादाय स्वयं करतलेनाभिनवपल्लवेनेव[8] विकचकमलतुल्यमाननमस्याः साश्रुलेखं[9] ममार्ज।

—कादम्बरी १

## .१२. हनूमता सीताया अङ्गुलीप्रदानम्

सीताया वचनं श्रुत्वा हनुमान् हरिपुङ्गवः[10]।
दुःखाद् दुःखाभिभूतायाः सान्त्वमुत्तरमब्रवीत् ॥ १ ॥
अहं रामस्य संदेशाद् देवि दूतस्तवागतः।
वैदेहि कुशली रामः स त्वां कौशलमब्रवीत् ॥ २ ॥

---

१ चरणयोः रागे उपयुक्तात् शेषेण।—पाय रंगविण्याकरितां उपयोगांत आणून शिल्लक राहिलेल्या. २ पिण्डालक्तकस्य ( गोळा केलेली लाख, अळिता ) रसेन। ३ **विडम्बयिष्यति**—वि+डम्ब् ( १० उ. ) या धातूचें द्वितीय भविष्य० चें तृ. पु. चें एक व०. 'वेडीवांकडीं करील.' ४ स्खलन्ती ( अडखळणारी ) गतिः ( चाल ) यस्य सः। बहु०. ५ भूषणमणीनां ( अलंकारांतील रत्नें ) मयूखानां ( किरण ) लेखाभिः (रांग) आकुलीक्रियमाणा (त्रास होणारी, चमकणारी) अतः एव लोला (चंचल) दृष्टिः यस्य सः। बहु०. ६ अप्रतिविधेये तु विधातरि—( सति सप्तमी ) दैवाला कोणताहि उपाय नसल्यामुळें. **प्रतिविधेय**—प्रति+वि+धा ( ३ उ. ) या धातूचें कर्मणि विध्यर्थी धातु० विशे० 'उपाय करण्याजोगा'. ७ कल्याणाः संपदः = उत्तम संपत्ति. ८ अभिनवेन ( ताजा, टवटवीत ) पल्लवेन ( पालवी, कोंवळीं पानें ) इव। ९ अश्रूणां लेखया सह। बहु०.

१० हरिषु पुङ्गवः—वानरश्रेष्ठ.

लक्ष्मणश्च महातेजा[1] भर्तुस्तेऽनुचरः प्रियः।
कृतवाञ्शोकसंतप्तः शिरसा तेऽभिवादनम् ॥ ३ ॥
सा तयोः कुशलं देवी निशम्य नरसिंहयोः।
प्रतिसंहृष्टसर्वाङ्गी[2] हनूमन्तमथाब्रवीत् ॥ ४ ॥
कल्याणी बत गाथेयं लौकिकी प्रतिभाति माम्।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ५ ॥
तस्यास्तद् वचनं श्रुत्वा हनुमान् मारुतात्मजः।
सीतायाः शोकतप्तायाः समीपमुपचक्रमे ॥ ६ ॥
यथा यथा समीपं स हनुमानुपसर्पति।
तथा तथा रावणं सा तं सीता परिशङ्कते ॥ ७ ॥
अहो धिग्धिक्कृतमिदं कथितं हि यदस्य मे।
रूपान्तरमुपागम्य[3] स एवायं हि रावणः ॥ ८ ॥
तामशोकस्य शाखां तु मुक्त्वा शोकेन कर्शिता।
तस्यामेवानवद्याङ्गी[4] धरण्यां समुपाविशत् ॥ ९ ॥
अवन्दत महाबाहुस्ततस्तां जनकात्मजाम्।
सा चास्माद् भयसंत्रस्ता भूयो नैनमुदैक्षत ॥ १० ॥
तं दृष्ट्वा वन्दमानं च सीता शशिनिभानना[5]।
अब्रवीद् दीर्घमुच्छ्वस्य वानरं मधुरस्वरा ॥ ११ ॥
मायां प्रविष्टो मायावी यदि त्वं रावणः स्वयम्।
उत्पादयसि मे भूयः संतापं तन्न शोभनम् ॥ १२ ॥
अथवा नैतदेवं हि यन्मया परिशङ्कितम्।
मनसो हि मम प्रीतिरुत्पन्ना तव दर्शनात् ॥ १३ ॥

---

१ **महातेजाः**—महत् तेजः यस्य सः। बहु०. २ प्रतिसंहृष्टानि (आनंदित झालीं आहेत) सर्वाणि अङ्गानि यस्याः सा। बहु०. ३ अन्यत् रूपम् = रूपान्तरम्। ४ अनवद्यानि (निर्दोष) अङ्गानि यस्याः सा। बहु०. ५ शशिना (चन्द्रेण) निभं (सदृशं) आननं (मुखम्) यस्याः सा। बहु०

यदि रामस्य दूतस्त्वमागतो भद्रमस्तु ते ।
पृच्छामि त्वां हरिश्रेष्ठ प्रिया रामकथा हि मे ॥ १४ ॥

गुणान् रामस्य कथय प्रियस्य मम वानर ।
चित्तं हरसि मे सौम्य नदीकूलं यथा रयः ॥ १५ ॥

नाहं स्वप्नमिमं मन्ये स्वप्ने दृष्ट्वा हि वानरम् ।
न शक्योऽभ्युदयः प्राप्तुं प्राप्तश्चाभ्युदयो मम ॥ १६ ॥

किं नु स्याच्चित्तमोहो[1]ऽयं भवेद् वाततितिस्त्वियम् ।
उन्मादजो[2] विकारो वा स्यादियं मृगतृष्णिका ॥ १७ ॥

इत्येवं बहुधा सीता संप्रधार्य[3] बलाबलम्[4] ।
रक्षसां कामरूपत्वा[5]न्मेने तं राक्षसाधिपम् ॥ १८ ॥

एतां बुद्धिं[6] तदा कृत्वा सीता सा तनुमध्यमा[7] ।
न प्रतिव्याजहाराथ वानरं जनकात्मजा ॥ १९ ॥

सीताया निश्चितं बुद्ध्वा हनुमान् मारुतात्मजः ।
श्रोत्रानुकूलैर्वचनैस्तदा तां समहर्षयत् ॥ २० ॥

दिष्ट्या[8] जीवसि वैदेहि राक्षसीवशमागता ।
न चिरा[10]द् द्रक्ष्यसे रामं लक्ष्मणं च महारथम् ॥ २१ ॥

अहं सुग्रीवसचिवो हनुमान् नाम वानरः ।
प्रविष्टो नगरीं लङ्कां लङ्घयित्वा महोदधिम् ॥ २२ ॥

नाहमस्मि तथा देवि यथा मामवगच्छसि ।
विशङ्का त्यज्यतामेषा श्रद्धत्स्व वदतो मम ॥ २३ ॥

---

१ चित्तस्य मोहः—मनाचा भ्रम. २ उन्मादात् जायते इति—उत्कट मनोविकारामुळें झालेला. ३ **संप्रधार्य**—सं+प्र+धृ ( १० उ. ) या धातूचें ल्यबन्त अव्यय, 'विचार करून'. ४ बलं च अबलं च—योग्यायोग्यता, न्यूनाधिकभाव. ५ कामरूपत्वात्—इच्छिलेलें ( वाटेल तें ) रूप धारण करण्याच्या सामर्थ्यामुळें. ६ बुद्धिं कृत्वा—विचार करून, मनाशीं ठरवून. ७ तनुः ( लहान ) मध्यमः ( कंबर ) यस्याः सा । बहु०. ८ [illegible] दैवयोगानें. १० न चिरात् = लवकरच.

वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥ २४ ॥
प्रत्ययार्थं[1] तवानीतं तेन दत्तं महात्मना ।
समाश्वसिहि भद्रं ते क्षीणदुःखफला[2] ह्यसि ॥ २५ ॥
गृहीत्वा प्रेक्षमाणा सा भर्तुः करविभूषितम्[3] ।
भर्तारमिव संप्राप्तं जानकी मुदिताभवत् ॥ २६ ॥
चारु तद् वदनं तस्यास्ताम्रशुक्लायतेक्षणम्[4] ।
बभूव हर्षोदग्रं[5] च राहुमुक्त इवोडुराट् ॥ २७ ॥
ततः सा ह्रीमती बाला भर्तुः संदेशहर्षिता ।
परितुष्टा प्रियं[6] कृत्वा प्रशशंस महाकपिम् ॥ २८ ॥
विक्रान्तस्त्वं समर्थस्त्वं प्राज्ञस्त्वं वानरोत्तम ।
येनेदं राक्षसपदं त्वयैकेन प्रधर्षितम् ॥ २९ ॥
प्रेषयिष्यति दुर्धर्षो रामो न ह्यपरीक्षितम् ।
पराक्रममविज्ञाय मत्सकाशं विशेषतः ॥ ३० ॥
कच्चिन्न[7] व्यथते रामः कच्चिन्न परितप्यते ।
कच्चिन्न विगतस्नेहो[8] विवासान्मयि राघवः ॥ ३१ ॥
सुखानामुचितो नित्यमसुखानामनूचितः ।
दुःखमुत्तरमासाद्य कच्चिद् रामो न सीदति ॥ ३२ ॥
सीताया वचनं श्रुत्वा मारुतिर्भीमविक्रमः[9] ।
शिरस्यञ्जलिमाधाय[10] वाक्यमुत्तरमब्रवीत् ॥ ३३ ॥

---

१ प्रत्ययार्थम् = प्रत्ययाय । 'खात्रीकरितां'. २ क्षीणं दुःखस्य फलं यस्याः सा । बहु०. **क्षीण**—क्षि ( १ प. ) या धातूचें कर्म० भूत० धातु० विशेषण. ३ करस्य विभूषितम् (= भूषणम् ) । ४ ताम्रे ( लाल ) शुक्ले ( स्वच्छ ) आयते ( लांब ) ईक्षणे ( डोळे ) यस्य तत् । बहु०. ५ हर्षेण उदग्रम् ( उल्हसित ) । ६ प्रियं कृत्वा—प्रिय गोष्ट करून. ७ कच्चित् न—नाहीं ना ? नाहीं अशी अपेक्षा आहे. ८ विगतः स्नेहः ( प्रेम ) यस्य सः । बहु०. ९ भीमः ( भयंकर, प्रचंड ) विक्रमः ( पराक्रम, सामर्थ्य ) यस्य सः । बहु०. १० शिरसि अञ्जलिम् आधाय—डोक्यावर हात जोडून, नमस्कार करून.

न त्वामिहस्थां[1] जानीते रामः कमललोचनः ।
तेन त्वां नानयत्याशु शचीमिव पुरन्दरः ॥ ३४ ॥

श्रुत्वैव स वचो मह्यं क्षिप्रमेष्यति राघवः ।
चमूं प्रकर्षन् महतीं हर्यृक्षगणसंयुताम्[2] ॥ ३५ ॥

तत्र यद्यन्तरा मृत्युर्यदि देवा महासुराः ।
स्थास्यन्ति पथि रामस्य स तानपि वधिष्यति ॥ ३६ ॥

तवादर्शनजेनार्ये[3] शोकेन परिपूरितः ।
न शर्म लभते रामः सिंहार्दित इव द्विपः ॥ ३७ ॥

सा रामसंकीर्तनवीतशोका रामस्य शोकेन समानशोका ।
शरन्मुखे[4] साम्बुदशेषचन्द्रा[5] निशेव वैदेहसुता बभूव ॥ ३८ ॥

—रामायणम्

## १३. दुष्यन्तस्याश्रमपदप्रवेशः

(नेपथ्ये) भो भो राजन्, आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

**सूतः**—(आकर्ण्यावलोक्य च) आयुष्मन्, अस्य खलु ते बाणपथवर्तिनः कृष्णसारस्यान्तरे तपस्विन उपस्थिताः ।

**राजा**—(ससंभ्रमम्) तेन[6] हि प्रगृह्यन्तां वाजिनः ।

**सूतः**—तथा । (रथं स्थापयति[7] ।)

(ततः प्रविशत्यात्मना तृतीयो[8] वैखानसः ।)

---

१ इह तिष्ठति इति—या ठिकाणीं असलेली. २ हरीणां (वानर) ऋक्षाणां (ऋक्ष वानर) च गणेन (समूहेन) संयुताम् (युक्ताम्) । तृ. तत्पु०. ३ अदर्शनजेन—अदर्शनात् जायते इति तेन । ४ शरदः (शरदृतूच्या) मुखे (आरंभीं) । ५ अम्बु ददाति इति अम्बुदः (मेघः) । अम्बुदानां शेषेण सह । बहु०. साम्बुदशेषः चन्द्रः यस्यां सा । बहु०. ६ तेन हि—तर मग, तसें असेल तर. ७ **स्थापयति**—स्था (१ प.) या धातूच्या प्रयोजकाचें वर्त० त. पु. चें एक व०. ८ आत्मना तृतीयः—स्वतः धरून तिसरा.

**वैखानसः**—( हस्तमुद्यम्य ) राजन्, आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

न खलु न खलु बाणः संनिपात्यो[1]ऽयमस्मिन्
मृदुनि मृगशरीरे पुष्पराशाविवाग्निः ।
क्व[2] बत हरिणकानां जीवितं चातिलोलं
क्व च निशित[3]निपाता वज्र[4]साराः शरास्ते ॥
तत् साधु[5]कृतसंधानं प्रतिसंहर सायकम् ।
आर्त[6]त्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥

**राजा**—एष प्रतिसंहृतः । ( यथोक्तं करोति । )

**वैखानसः**—सदृशमेतत् पुरुवंशप्रदीपस्य भवतः ।
जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि ॥

**इतरौ**—( बाहू उद्यम्य ) सर्वथा चक्रवर्तिनं पुत्रमाप्नुहि ।

**राजा**—( सप्रणामम् ) प्रतिगृहीतम् ।

**वैखानसः**—राजन्, समिदा[7]हरणाय प्रस्थिता वयम् । एष खलु कण्वस्य कुलपतेरनु[8]मालिनीतीरमाश्रमो दृश्यते । न चेदन्य[9]कार्यातिपातः प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः । अपि च

---

१ **संनिपात्यः**—सं+नि+पत् ( १ प. ) या धातूच्या प्रयोजकाचें कर्मणि विध्यर्थी धातु० विशे० पुं. प्र. चें एक व०. २ **क्व**...**क्व**...कोठें,...कोठें ? दोहोंमध्यें फारच ( विरोधात्मक ) अंतर आहे. ३ निशिताः ( तीक्ष्ण ) निपाताः ( पडणें, आघात ) येषां ते । बहु०. **निशित**—नि+शो (४ प.—श्यति) या धातूचें कर्म० भूत० धातु० विशे०. ४ वज्रस्य सारः इव सारः ( बल, सामर्थ्य ) येषां ते । बहु०. ५ साधु ( चांगल्या प्रकारें ) कृतं संधानं ( नेम धरणें, नेम ) यस्य तम् । बहु०. ६ आर्तानां ( = पीडितानां ) त्राणाय ( = रक्षणाय) । ७ समिधाम् आहरणाय—समिधा गोळा करून आणण्याकरितां. ८ अनुमालिनीतीरम् = मालिनीनदीतीरे । ९ न चेत् अन्यस्य कार्यस्य अतिपातः—दुसऱ्या कार्यात अडथळा येत नसेल तर.

रम्यास्तपोधनानां प्रतिहतविघ्नाः[1] क्रियाः समवलोक्य ।
ज्ञास्यसि कियद् भुजो मे रक्षति मौर्वीकिणाङ्कः[2] इति ॥

**राजा**—अपि संनिहितोऽत्र कुलपतिः ।

**वैखानसः**—इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ।

**राजा**—भवतु । तामेव द्रक्ष्यामि । सा खलु विदितभक्तिं[3] मां महर्षेः कथयिष्यति ।

**वैखानसः**—साधयामस्तावत् । ( सशिष्यो निष्क्रान्तः )

**राजा**—सूत, चोदयाश्वान् । पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहे ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । ( भूयो रथवेगं निरूपयति । )

**राजा**—( समन्तादवलोक्य ) सूत, अकथितोऽपि ज्ञायत एव यथायमाभोगस्तपोवनस्येति[4] ।

**सूतः**—कथमिव ।

**राजा**—किं न पश्यति भवान् । इह हि

कुल्याम्भोभिः[5] पवनचपलैः शाखिनो धौतमूला[6]
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन[7][8] ।
एते चार्वागुपवनभुवि[9] च्छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति ॥

**सूतः**—सर्वमुपपन्नम् ।

---

१ प्रतिहताः ( नाहींशी झालीं आहेत ) विघ्नाः यासां ताः । बहु०. २ मौर्व्याः (=गुणस्य, दोरीचा ) किणः ( घट्टा, वण ) सः अङ्कः ( =भूषणम् ) यस्य सः । बहु०. ३ विदिता ( =ज्ञाता ) भक्तिः ( =तापससेवा ) यस्य तम् । बहु०. ४ यथा अयम् आभोगः (आसपासचा भाग) तपोवनस्य इति । ५ कुल्या = 'अल्पा कृत्रिमा सरित्' कालवा, पाट. कुल्यायाः अम्भोभिः (=जलैः) । ६ धातानि मूलानि येषां ते । बहु०. **धौत** (धावित)—धाव् ( १ उ. धुणें, स्वच्छ करणें ) या धातूचें कर्म० भूत० धातु० विशे०. ७ किसलयानां रुचां ( =तेजसाम्, कान्तीनाम् ) रागः—सुंदर पालवीचा लाल रंग. ८ आज्यस्य (पातळ तूप) धूमस्य उद्गमेन = उद्गतेन (वर [illegible]) आज्यधूमेन । ९ अर्वाक् (अ.) जवळ, समोर.

**राजा**—( स्तोकमन्तरं गत्वा ) तपोवननिवासिनामुपरोधो मा भूत्। एतावत्येव रथं स्थापय यावदवतरामि ।

**सूतः**—धृताः प्रग्रहाः । अवतरत्वायुष्मान् ।

**राजा**—( अवतीर्य ) सूत, विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम । इदं तावद् गृह्यताम् । ( सूतस्याभरणानि धनुश्चोपनीय ) सूत, यावदाश्रमवासिनः प्रत्यवेक्ष्याहमुपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः ।

**सूतः**—तथा । ( निष्क्रान्तः )

**राजा**—( परिक्रम्यावलोक्य च ) इदमाश्रमद्वारम् । यावत् प्रविशामि । ( प्रविश्य, निमित्तं सूचयन् )

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥

( नेपथ्ये, इत इतः सख्यौ )

**राजा**—( कर्णं दत्त्वा ) अये, दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते । यावदत्र गच्छामि । ( परिक्रम्यावलोक्य च ) अये, एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते । ( निपुणं निरूप्य ) अहो, मधुरमासां दर्शनम् ।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥

---

१ उपरोधः ( =पीडा ) मा अभूत्—त्रास होतां कामा नये. २ एतावति एव = एतत्परिमाणे एव वर्त्मनि गते ।—येथेंच. ३ विनीतेन (नम्र, सभ्य) वेषेण । ४ आर्द्राणि (=सजलानि) पृष्ठानि येषां ते। बहु०. ५ **इत इतः**—इकडे, हा रस्ता. ६ **वृक्षवाटिकां दक्षिणेन**—झाडांच्या बागेच्या उजव्या बाजूला. ७ स्वस्य ( =आत्मनः ) प्रमाणस्य (=आकृतेः ) अनुरूपैः (=योग्यैः ) । ८ **सेचनघटैः**—सेचनार्थैः घटैः । मध्यमपदलोपी समास, 'पाणी घालण्याच्या कळश्यांनीं'. ९ शुद्धान्ते ( =अन्तःपुरे ) दुर्लभम् ( =दुष्प्रापम् ) वपुः ( =शरीरम् ) । **शुद्धान्तः**—शुद्धः अन्तः (=मध्यभागः) यस्य सः । १० **दूरीकृताः**—दूर या शब्दापासून झालेल्या दूरीकृ या च्वि-धातूचें कर्मणि भूत० धातु० विशेषण, स्त्री. प्र. चें. बहु० व०.

यावदिमां छायामाश्रित्य प्रतिपालयामि । ( विलोकयन् स्थितः । )

—अभिज्ञानशाकुन्तलम् १

## १४ चन्द्रापीडाय शुकनासोपदेशः

तात चन्द्रापीड, विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं च निसर्गत एवाभानु[1]भेद्यम[2]प्रदीपप्रभापनेयमतिगहनं तमो यौवन[3]प्रभवमित्यतो विस्तरेणाभिधीयसे । गर्भे[4]श्वरत्वमभि[5]नवयौवनत्वमप्रतिमरूपत्वममानुष[6]शक्तित्वं चेति मह[7]तीयं खल्वनर्थ[8]परम्परा । सर्वा[9]विनयानामेकैकमप्येषामायतनं किमु[10]त समवायः । यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । अनुज्झितधवलतापि सरागैव[11] भवति यूनां[12] दृष्टिः । इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगमृगतृष्णिका । तान्येव विषयस्वरूपाण्यास्वा[13]द्यमानानि मधुरतराण्यापतन्ति मनसः । नाशयति च दि[14]ङ्मोह इवोन्मार्ग[15]प्रवर्तकः पुरुषमत्यासङ्गो विषयेषु । भवादृशा एव भवन्ति भाजनान्युपदेशानाम् । अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सु[16]खमुपदेशगुणाः । अयमेव चाना[17]स्वादितविषयरसस्य ते काल

---

१ न भानुना ( सूर्येण ) भेद्यम् । २ न प्रदीपानां प्रभया अपनेयम् ।—दिव्यांच्या प्रकाशानें न घालविलें जाणारें ( तम, अंधकार ). ३ यौवनात् प्रभवः ( जन्म, उत्पत्ति ) यस्य तत् । बहु०. ४ गर्भेश्वरत्वम्—जन्मतःच श्रीमंती. ५ अभिनवयौवनत्वम् = ऐन तारुण्य. ६ अमानुषशक्तित्वम्—अमानुष किंवा प्रचंड सामर्थ्य. ७ महती + इयम् । ८ अनर्थानां परम्परा—संकटांची मालिका. ९ सर्वेषाम् अविनयानाम् ( गैरशिस्त कृत्यें, दोष ) । एकैकम् अपि एषाम् आयतनम् ( = स्थानम् ) । १० **किमुत**—किती जास्त ? काय सांगायला पाहिजे ? ११ सरागा ( = रागेण सह )—लाल; प्रेमपूर्ण. १२ **यूनाम्**—युवन् ( तरुण ) या शब्दाचें ष. चें बहु० व०. १३ **आस्वाद्यमानानि**—आ+स्वाद् ( १ आ. ) या धातूच्या प्रयोजकाचें कर्मणि वर्त० धातु० विशे० नपुं० प्र. चें बहु व०, 'अनुभविलीं जात असतां'. १४ दिशां मोहः ( चूक )—कोणत्या दिशेला जावें हें न कळणें. १५ उन्मार्गस्य प्रवर्तकः—वाईट किंवा चुकीच्या मार्गाला नेणारा. १६ सुखम् = सुखेन । 'सहजच, सहजपणा'. १७ न आस्वादितः विषयाणां रसः येन तस्य । बहु०

उपदेशस्य । गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षमजलं स्नानम् । नोद्वेगकरः प्रजागरः । विशेषेण तु राज्ञां विरला हि तेषा-मुपदेष्टारः । अलीकाभि[1]मानोन्मादकारीणि धनानि । [2]राज्यविषविकार-तन्द्राप्रदा राज्यलक्ष्मीः ।

आलोकयतु [3]तावल्लक्ष्मीमेव भवान् प्रथमम् । इयमनार्या लब्धापि दुःखेन परिपाल्यते । न परिचयं रक्षति । नाभिजनमीक्षते । न वैदग्ध्यं गणयति । न त्यागमाद्रियते । न विशे[4]षज्ञतां वि[5]चारयति । न क्वचिन्निर्भरमाबध्ना-ति पद[6]म् । यथा यथेयं दीप्यते तथा तथा कज्जलमलिनमेव कर्म केवलमुद्वमति । न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुप-गूढो यो वा न विप्रलब्धः । एवंविधयापि चानया दुराचारया कथ-मपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः सर्वाविनयाधिष्ठानतां च गच्छन्ति । तेषां दाक्षिण्यं प्रक्षाल्यते, हृदयं मलि[9]नीभवति, सत्य-वादितापह्रियते, गुणाश्चो[10]त्सार्यन्ते । केचित् संपद्भिः प्रलो[11]भ्यमाना रा[12]गावेशेन बाध्यमाना विह्व[13]लतामुपयान्ति । आसन्नमृत्यव इव बन्धुजन-मपि नाभिजानन्ति । अदूरदर्शिनः पापेनेवा[14]ध्मातमूर्तयो भवन्ति ।

---

१ अलीकेन (खोट्या) अभिमानेन उन्मादं (वेडेपणा, भ्रम) कुर्वन्ति इति । २ राज्यस्य एव विषस्य विकारं तन्द्रां (गुंगी) प्रददाति इति । उप० त. ३ तावत्—खरेंच; आतां. ४ विशेषज्ञता—गुण व अवगुण यांमधील फरक जाणण्याची पात्रता. ५ **विचारयति**—वि+चर् (१ प.) या धातूच्या प्रयोजकाचें वर्त० तृ. पु. चें एक व०. ६ **पदम् आबन्ध्** (९ प.) पाऊल ठेवणें. लक्ष्मी कोठेंहि आपलें पाऊल अचल ठेवीत नाहीं. ७ अपरिचितया अनया—अनोळखी अशा हिच्याकडून. ८ दुष्टः आचारः (वागणूक) यस्याः तया । बहु०. ९ **मलिनीभवति**—मलिन या शब्दापासून झालेल्या मलिनीभू (१ प.) या च्वि धातूचें वर्त० तृ. पु. चें एक व०. अमलिनं मलिनं संपद्यमानं भवति इति । १० **उत्सार्यन्ते**—उद्+सृ (१ प.) या धातूच्या प्रयोजकाचें वर्त० कर्मणि तृ. पु. चें बहु व०, 'दूर सारले जातात'. ११ **प्रलोभ्यमानाः**—प्र+लुभ् (४ प.) या धातूच्या प्रयोजकाचें वर्त० कर्मणि धातु० विशे० पुं प्र. चें बहु०. आकर्षिले जाणारे, ओढले जाणारे. १२ रागस्य (प्रेमाच्या) आवेशेन । १३ विह्वलताम् उपयान्ति—विह्वल होतात, गोंधळले जातात. १४ आध्माताः (फुगलेलें) मूर्तयः (शरीर) येषां ते । बहु०

तदवस्थाश्च[1] व्यसनशत[2]शरव्यतामुपगताः पतितमप्यात्मानं नावगच्छन्ति । अपरे तु स्वार्थनिष्पादनपरै[3]र्दोषानपि गुणपक्षमध्यारोपयद्भि[4]रन्तः स्वयमपि हसद्भिः प्रतारणकुशलैर्धूर्तैः स्तुतिभिः प्रतार्यमाणाः सर्वजनस्योपहास्यतामुपयान्ति । दृष्टिपातमप्युपकारपक्षे[5] स्थापयन्ति । स्पर्शमपि पावनमाकलयन्ति । मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यो नाभिवादयन्त्यभिवादनार्हान् नाभ्युत्तिष्ठन्ति गुरून् । जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम् । आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय । कुप्यन्ति हितवादिने । सर्वथा तमभिनन्दन्ति, तं पार्श्वे कुर्वन्ति, तं बहु मन्यन्ते, तमाप्ततामापादयन्ति[6], योऽहर्निशमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति यो वा माहात्म्यमुद्भावयति[7] ।

तदेवंप्राये राज्यतन्त्रे[8]ऽस्मिन् महामोहकारिणि च यौवने कुमार तथा प्रयतेथा यथा नोपहास्यसे जनैर्नोपालभ्यसे सुहृद्भिर्नापह्रियसे सुखेन । कामं[9] भवान् प्रकृत्यैव धीरः पित्रा च महता प्रयत्नेन समारोपितसंस्कार[10]स्तरलहृदय[11]मप्रतिबुद्ध[12]मेव मादयन्ति धनानि । तथापि भवद्गुणसंतोषो

---

१ सा अवस्था येषां ते ! ती ( फुगलेली, ताठर ) अवस्था ( वृत्ति ) ज्यांची आहे असे. २ व्यसनानां ( व्यसन, संकट ) शतस्य शरव्यताम् ( लक्ष्य ) उपगताः ( झालेले, बनलेले ). ३ स्वार्थस्य निष्पादने परैः—स्वार्थ संपादन करण्यामध्यें गढून गेलेले. ४ गुणानां पक्षम् अध्यारोपयद्भिः—गुणाच्या बाजूला चिकटविणारे, गुण आहेत असें दाखविणारे. **अध्यारोपयत्**—अधि+आ+रुह् ( १ प. ) या धातूच्या प्रयोजकाचें वर्त० धातु० विशे०. ५ उपकाराणां पक्षे—उपकारांच्या बाजूला, उपकार म्हणून. ६ आप्तताम् आपादयन्ति—आप्तपणाच्या स्थितीला नेतात, त्याला आप्त किंवा विश्वसनीय मनुष्य म्हणून मानतात. आपादयन्ति—धातु आ+पद् ( ४ आ. ) प्रयो०. ७ **उद्भावयति**—उद्+भू ( १ प. ) या धातूच्या प्रयोजकाचें वर्त० तृ. पु. चें एक व०, 'जाहीर करितो'. ८ एवंप्राये राज्यतन्त्रे—बहुंशी अशाच प्रकारची राज्यपद्धति असतांना. ९ **कामम्**—ही गोष्ट कबूल कीं. १० ( पित्रा ) समारोपितः ( पेरलें आहे, दिलें आहे ) संस्कारः ( संस्कृति, शिक्षण ) यस्मिन् सः । ११ तरलं ( चंचल ) हृदयं यस्य सः । १२ [illegible]—अविकसित, [illegible]

मामेवं मुखरीकृतवान्[1] । इदमेव च पुनःपुनरभिधीयसे । विद्वांसमपि धीरमप्यभिजातमपीयं दुर्विनीता खलीकरोति[2] लक्ष्मीरिति । सर्वथा पित्रा क्रियमाणमनुभवतु भवान् यौवराज्याभिषेकमनेकमङ्गलम् । कुलक्रमागता-मुद्वह पूर्वपुरुषैरूढां[3] धुरम् । अवनमय द्विषतां शिरांसि । उन्नमय बन्धुवर्गम् । अयं च ते कालः प्रतापमारोपयितुम्[4] । आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो[5] भवति । इत्येतावदभिधायोपशशाम[6] ।

—कादम्बरी

## १५. सामान्यश्लोकाः

अनन्तपारं[7] किल शब्दशास्त्रं[8] स्वल्पं तथायुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य[9] फल्गु हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥ १ ॥

न हि तद् विद्यते किंचिद् यदर्थेन न सिध्यति ।
यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥ २ ॥

कृता भिक्षा रेकैर्वितरति नृपो नोचितमहो
कृषिः क्लिष्टा[10]वृष्ट्या प्रचुरगहनः[11] सेवनविधिः ।

---

१ **मुखरीकृतवान्**—मुखर (बोलका, वाचाळ) या शब्दापासून झालेल्या मुखरीकृ या च्वि धातूचें कर्तरि भूत० धातु० विशे०, पुं. प्र. चें एक व०. 'बोलका केलें, बोलायला लावलें.'. २ **खलीकरोति**—खल (दुष्ट, नीच) पासून खलीकृ—च्वि धातु, 'दुष्ट बनवितें' ३ **ऊढाम्**—वह् (१ उ.) या धातूचें कर्म० भूत० धातु० विशेषण, स्त्री. द्वितीयेंचें एक व०. ४ **आरोपयितुम्**—आ+रुह् (१ प.) या धातूच्या प्रयोजकाचें तुमन्त अव्यय, 'सामर्थ्य दाखविण्याचा'. ५ सिद्धः (पाळली गेली आहे; खरा ठरला आहे) आदेशः (आज्ञा; शब्द, भाकित) यस्य सः । बहु०. ६ इति एतावत् अभिधाय (बोलून) उपशशाम (थांबला). ७ **अनन्तपारम्**—न स्तः अन्तपारौ (अन्तः पारः च) यस्य तत् । बहु०. पारः, पारम् (पु. न.)—पैलतीर, मर्यादा. ८ **शब्दशास्त्रम्**—व्याकरणशास्त्र. ९ **अपास्य**—अप+अस् (४ प.) या धातूचें ल्यबन्त अव्यय, 'टाकून देऊन, सोडून देऊन'. १० **क्लिष्टा** (क्लिश् ९ प. बिघडणें)। अवृष्ट्या—अवर्षणानें, पाऊस न पडल्यानें. ११ **प्रचुरगहनः** (फार कठीण)—प्रचुरं यथा तथा गहनः ।

कुसीदाद् दारिद्र्यं परकरगतग्रन्थिशमनाद्[1]
न मन्ये वाणिज्यात् किमपि परमं वेतनमिह ॥ ३ ॥

न स्वल्पस्य कृते भूरि नाशयेन्मतिमान् नरः ।
एतदेव हि पाण्डित्यं यत् स्वल्पाद् भूरिरक्षणम् ॥ ४ ॥

अरक्षितं तिष्ठति[2] दैवरक्षितं सुरक्षितं दैवहतं[3] विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि[4] गृहे विनश्यति ॥ ५ ॥

सुहृदामुपकारकारणाद् द्विषतां चाप्यपकारकारणात् ।
नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम् ॥ ६ ॥

यस्मिञ्जीवति जीवन्ति बहवः सोऽत्र जीवति ।
वयांसि[5] किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम् ॥ ७ ॥

यज्जीव्यते क्षणमपि प्रथितं मनुष्यैर्
विज्ञानशौर्यविभवार्यगुणैः[6] समेतम्[7] ।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिराय[8] बलिं च भुङ्क्ते ॥ ८ ॥

निरतिशयं गरिमाणं तेन जनन्याः स्मरन्ति विद्वांसः ।
यत्[9] कमपि वहति गर्भं महतामपि यो गुरुर्भवति ॥ ९ ॥

अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते ।
निवसन्नन्तर्दारुणि[10] लङ्घ्यो[11] वह्निर्न तु ज्वलितः ॥ १० ॥

---

१ परेषां करे ( =हस्ते ) गतस्य ग्रन्थेः (द्रव्यस्य) शमनात् ( =नाशात् ) । तत्पु०. २ तिष्ठति =जीवति । ३ दैवेन हतम् । ४ कृताः प्रयत्नाः यस्मै । बहु०. ५ वयांसि =विहंगाः, पक्षिणः । —वयस् ( न. ) या शब्दाचें प्र. चें. बहु०. ६ विज्ञानं च शौर्यं च विभवः ( संपत्ति ) च आर्यगुणाः ( चांगले गुण, सभ्यगुण ) च तैः । ७ **समेतम्**—सम्+आ+इ ( २ प. ) या धातूचें कर्म० भूत० धातु० विशे०, नपुं. प्र. चें एक व. ८ **चिराय**—पुष्कळ काळपर्यंत. ९ **यत्**—ज्या अर्थी, ज्या कारणास्तव. १० निवसन् अन्तर् दारुणि—लाकडाच्या आंत राहाणारा किंवा असणारा ( अग्नि ). ११ **लङ्घ्यः**—लङ्घ् (१ आ.) या धातूचें कर्मणि विध्यर्थी धातु० विशेषण पुं. प्र. चें एक व., [illegible]

वचस्तत्र प्रयोक्तव्यं[1] यत्रोक्तं लभते फलम् ।
स्थायीभवति[2] चात्यन्तं रागः शुक्लपटे यथा ॥ ११ ॥

सर्पान् व्याघ्रान् गजान् सिंहान् दृष्ट्वोपायैर्वशीकृतान् ।
राजेति कियती[3] मात्रा धीमतामप्रमादिनाम् ॥ १२ ॥

उदीरितोऽर्थः[4] पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः ।
अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला[5] हि बुद्धयः ॥१३॥

यो न वेत्ति गुणान् यस्य न तं सेवेत पण्डितः ।
न हि तस्मात् फलं तस्य सुकृष्टादूषरादिव ॥ १४ ॥

अपि स्थाणुवदासीनः[6] शुष्यन् परिगतः क्षुधा ।
न त्वेवानात्मसंपन्नाद्[7] वृत्तिमीहेत पण्डितः ॥ १५ ॥

दन्तस्य निष्कोषणकेन नित्यं कर्णस्य कण्डूयनकेन वापि ।
तृणेन कार्यं भवतीश्वराणां किमङ्ग[8] वाग्घस्तवता[9] नरेण ॥ १६ ॥

कनकभूषणसंग्रहणोचितो[10] यदि मणिस्त्रपुणि प्रतिबध्यते ।
न स विरौति न चापि स शोभते भवति योजयितुर्वचनीयता ॥ १७ ॥

कौशेयं कृमिजं[11] सुवर्णमुपलाद् दूर्वापि गोरोमतः
पङ्कात् तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात् ।

---

१ **प्रयोक्तव्यम्**—प्र+युज् ( ७ आ. ) या धातूचें कर्मणि विध्यर्थी धातु० विशे० नपुं. प्र. चें एक व०, 'योजावें, करावें'. २ **स्थायीभवति**—स्थायिन् ( वि. ) 'टिकणारा' यापासून 'स्थायीभू' हा धातु. ३ राजा इति कियती मात्रा—राजाची काय किंमत ? मात्रा (स्त्री.)—माप, गणती, महत्त्व. ४ **उदीरितः** ( =उक्तः )—उद्+ईर् ( २ आ. ) या धातूच्या प्रयोजकाचें कर्मणि भूत० धातु० विशे०, पुं. प्र. चें एक व०. ५ परेषां इङ्गितानां (अभिप्राय, गुप्त गोष्ट) ज्ञानं फलं यासां ताः (बुद्धयः) । बहु०. ६ स्थाणुवत् (खांबासारखा स्वस्थ) आसीनः (बसलेला)। **आसीन**—आस् ( २ आ. ) या धातूचें वर्त० धातु० विशेषण. ७ न आत्मसंपन्नात् ( =अजितेन्द्रियात् )। ८ **किमङ्ग** ( अ. )—'मग किती तरी जास्त ?' किंवा 'मग किती तरी कमी ?'. ९ वाक्+हस्त+वत्—वाणी आणि हात असलेला. १० कनकस्य (सोन्याच्या) भूषणें संग्रहणाय (बसविण्याला) उचितः (योग्य) । चतु० त.



११ कृमेः (किड्यापासून) [illegible]

काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो[1] रोचना
प्राकाश्यं[2] स्वगुणोदयेन[3] गुणिनो गच्छन्ति किं जन्मना ॥ १८ ॥

दारेषु किंचित् स्वजनेषु किंचिद् गोप्यं वयस्येषु सुतेषु किंचित्।
युक्तं न वा युक्तमिदं विचिन्त्य वदेद् विपश्चिन्महतोऽनुरोधात् ॥१९॥

स्वामिनि गुणान्तरज्ञे[4] गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
मित्रे चानुपचर्ये निवेद्य[5] दुःखं सुखी भवति ॥ २० ॥

दर्शितभयेऽपि[6] धातरि धैर्यध्वंसो भवेन्न धीराणाम् ।
शोषितसरसि[7] निदाघे नितरामेवोद्धतः सिन्धुः ॥ २१ ॥

भये वा यदि वा हर्षे संप्राप्ते यो विमर्षयेत् ।
कृत्यं न कुरुते वेगान्न स संतापमाप्नुयात् ॥ २२ ॥

गण्डस्थलेषु मदवारिषु[8] बद्धराग-[9]
मत्तभ्रमद्भ्रमरपादतलाहतोऽपि ।
कोपं न गच्छति नितान्तबलोऽपि नाग-
स्तुल्ये बले तु बलवान् परिकोपमेति ॥ २३ ॥

मन्त्रिणां भिन्नसंधाने[10] भिषजां सान्निपातके ।
कर्मणि व्यज्यते[11] प्रज्ञा स्वस्थे को वा न पण्डितः ॥ २४ ॥

---

१ **गोपित्ततः**—गोरोचनापासून. **तस्** हा पंचमीच्या अर्थाचा प्रत्यय आहे. २ प्राकाश्यं गच्छन्ति—प्रसिद्धि पावतात. प्राकाश्यम् = प्रकाशस्य भावः । ३ स्वेषां गुणानाम् उदयेन—स्वतःच्या गुणांच्या उदयानें ( म्ह० गुणांनीं ). ४ **गुणान्तरज्ञे**—गुणयोः अन्तरं जानाति इति तस्मिन् । ५ निवेद्य ( = कथयित्वा )—नि + विद् ( २ प. ) या धातूच्या प्रयो० चें ल्यबन्त अव्यय. ६ दर्शितं भयं येन तस्मिन् । 'प्रत्यक्ष ब्रह्मदेवानें ( धातृ ) जरी धमकी दिली तरीहि'. ७ शोषितं सरः येन तस्मिन्। बहु०. ८ मदस्य वारि ( मदजल ) विद्यते येषां तेषु । बहु०. ९ बद्धात् ( जडलेल्या ) रागात् ( प्रेमामुळें ) मत्तैः भ्रमद्भिः भ्रमरैः पादतलैः आहतः । तृ. त. १० भिन्ने संधाने—शांततेचा भंग झाला असतांना. ११ **व्यज्यते**—वि + अञ्ज् (७ प.) [illegible]

नरपतिहितकर्ता द्वेष्यतां[1] याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः ।
इति महति विरोधे वर्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ २५ ॥

यो ह्यपकर्तुमशक्तः कुप्यति किमसौ नरोऽत्र निर्लज्जः ।
उत्पतितोऽपि हि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुम् ॥ २६ ॥

कोऽर्थान् प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरान्तरगतः[2] कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥ २७ ॥

यदृच्छयाप्युपनतं सकृत् सज्जनसंगतम्[3] ।
भवत्यजरमत्यन्तं[4] नाभ्यासक्रममीक्षते[5] ॥ २८ ॥

कालातिक्रमणं[6] वृत्तेर्यो न कुर्वीत भूपतिः ।
कदाचित् तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥ २९ ॥

भिन्नस्वरमुखवर्णः शङ्कितदृष्टिः समुत्पतिततेजाः[7] ।
भवति हि पापं कृत्वा स्वकर्मसंत्रासितः[8] पुरुषः ॥ ३० ॥

अत्तुं वाञ्छति शाम्भवो गणपतेराखुं क्षुधार्तः फणी
तं च क्रौञ्चरिपोः[9] शिखी गिरिसुतासिंहोऽपि[10] नागाशनम् ।

---

१ द्वेष्यतां याति—द्वेषिला जातो, द्वेषाला पात्र होतो. २ कालस्य न गोचरान्तरगतः—काळाच्या जबड्यांत पडला नाहीं. गोचरः = आटोका, टप्पा. ३ सज्जनैः संगतम् ( = संगतिः )। ४ **अजरम्**—नास्ति जरा यस्य तत्। 'अक्षय्य, दृढ' ५ अभ्यासक्रमम् = आवृत्ति. ६ कालस्य अतिक्रमणम्—विलंब, उशीर. ७ समुत्पतितं तेजः यस्य सः। बहु०. 'चेहरा फिका पडलेला, निस्तेज'. ८ स्वस्य कर्मणा संत्रासितः—स्वतःच्या ( वाईट ) कृत्यानें भ्यालेला. ९ क्रौञ्चस्य ( = क्रौञ्चपर्वतस्य ) रिपोः ( = शत्रोः )—कार्तिकेयस्य। १० गिरिसुता—गिरिजा, पार्वती.

इत्थं यत्र परिग्रहस्य घटना शम्भोरपि स्याद् गृहे
तत्रान्यस्य कथं न भावि[1] जगतो यस्मात् स्वरूपं हि तत् ॥३१॥

दुर्मन्त्रान्नृपतिर्विनश्यति यतिः सङ्गात् सुतो लालनाद्
विप्रोऽनध्ययनात् कुलं कुतनयात् स्नेहः प्रवासाश्रयात् ।
मैत्री चाप्रणयात् समृद्धिरनयाच्छीलं खलोपासनात्
स्त्री गर्वादनवेक्षणादपि कृषिस्त्यागात् प्रमादाद् धनम् ॥ ३२ ॥

उपेक्षितः क्षीणबलोऽपि शत्रुः प्रमाददोषात् पुरुषैर्मदान्धैः ।
साध्योऽपि भूत्वा प्रथमं ततोऽसावसाध्यतां व्याधिरिव प्रयाति ॥ ३३ ॥

अनेकदोषदुष्टोऽपि[2] कायः कस्य न वल्लभः ।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ॥ ३४ ॥

इतः[3] स दैत्यः प्राप्तश्रीर्न[4]त एवार्हते क्षयम् ।
विषवृक्षोऽपि संवर्ध्य[5] स्वयं छेत्तुमसांप्रतम् ॥ ३५ ॥

आदौ न वा प्रणयिनां प्रणयो विधेयो[6]
दत्तोऽथवा प्रतिदिनं परिपोषणीयः ।
उत्क्षिप्य[7] यत् क्षिपति तत् प्रकरोति लज्जां
भूमौ स्थितस्य पतनाद् भयमेव नास्ति ॥ ३६ ॥

संतप्तायसि[8] संस्थितस्य पयसो नामापि[9] न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिसंपुटगतं[10] तज्जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणः संवासतो[11] जायते ॥ ३७ ॥

---

१ कथं न भावि—कसें होणार नाहीं? २ अनेकैः दोषैः दुष्टः (अपि)। तृ. त. ३ इतः = येथून, माझ्यापासून. ४ प्राप्ता श्रीः (वैभव, भरभराट) येन। बहु०. न इतः (= मत्तः) एव अर्हते (= अर्हति) क्षयम् (= नाशम्)। ५ संवर्ध्य = वाढवून, लावून; सं+वृध् (१ आ.) या धातूच्या प्रयोजकाचें ल्यबन्त अव्यय. ६ **विधेयः** (= कार्यः)। वि+धा (३ उ.) या धातूचें कर्मणि विध्यर्थी धातु० विशे०. ७ **उत्क्षिप्य**—उद्+क्षिप् (६ उ.) या धातूचें ल्यबन्त अव्यय. ८ संतप्ते अयसि—तापलेल्या लोखंडावर. ९ नाम अपि—नांव सुद्धां, लेशहि. १० सागरस्थानां शुक्तीनां संपुटेषु गतम्—समुद्रांतील मोत्यांच्या शिंपल्यांमध्यें पडलेलें. ११ संवासतः—सहवासापासून, सगतीनें.

निमित्तमुद्दिश्य[1] हि यः प्रकुप्यति ध्रुवं हि तस्यापगमे प्रसीदति ।
अकारणद्वेषपरो हि यो भवेत् कथं नरोऽसौ परितोषमेष्यति ॥ ३८ ॥

भावस्निग्धैरुपकृतमपि[2] द्वेष्यतां[3] याति किञ्चि-
च्छाठ्यादन्यैरपकृतमपि प्रीतये[4] चोपयाति ।
दुर्ग्राह्यत्वान्नृपतिमनसां[5] नैकभावाश्रयाणां[6]
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ३९ ॥

गुणवत्तरपात्रेण[7] च्छाद्यन्ते गुणिनां गुणाः ।
रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति[8] ॥ ४० ॥

यस्मिन् कुले यः पुरुषः प्रधानः स सर्वयत्नैः परिरक्षणीयः ।
तस्मिन् विनष्टे स्वकुलं विनष्टं न नाभिभङ्गे[9] ह्यरका वहन्ति ॥ ४१ ॥

नाभक्ष्यं भक्षयेत् प्राज्ञः प्राणैः[10] कण्ठगतैरपि ।
विशेषात् तदपि स्तोकं लोकद्वयविनाशकम्[11] ॥ ४२ ॥

अशुद्धप्रकृतौ[12] राज्ञि जनता नानुरज्यते ।
यथा गृध्रसमासन्नः कलहंसः समाचरेत् ॥ ४३ ॥

---

१ **उद्दिश्य**—उद्+दिश् ( ६ प. ) या धातूचें ल्यबन्त अव्यय 'दाखवून'. २ **भावेन** ( अन्तःकरणानें, अन्तःकरणापासून ) **स्निग्धैः** ( प्रेमळ असलेल्यांकडून )। **उपकृतम्** = उपकारः । ३ **द्वेष्यतां याति**—द्वेषाला कारण होतो. ४ **प्रीतये उपयाति**—प्रेम जोडतो, प्रिय होतो. ५ **दुर्ग्राह्यत्वात्**—ग्रहणशक्ति विपरीत असल्यामुळें. ६ **न एकभावानाम् आश्रयाणाम्**—अनेक भावनांचे आधार असलेल्या ( मनांचे ), विविध भावनांनीं भरलेल्या. ७ **गुणवत्तरपात्रेण**—अधिक चांगल्या गुणांचें स्थान ( पात्र ) असलेल्यांकडून, अधिक चांगले गुण असलेल्या लोकांकडून. ८ **भानौ उदिते सति**—सूर्य उगवला असतांना, सूर्य उगवल्यावर. ९ **नाभेः भङ्गे**—चाकाचा तुंबा ( मध्यभाग ) मोडला असतांना १० **प्राणैः कण्ठगतैः अपि**—प्राण कंठांत आले असतांनासुद्धां, प्राण जाण्याची वेळ आली तरीसुद्धां. ११ **लोकद्वयस्य विनाशकम्**—दोन्ही लोकांचा ( इहलोक आणि परलोक ) नाश करणारें. १२ **अशुद्धाः** ( अप्रामाणिक, वाईट ) **प्रकृतयः** ( मन्त्री, प्रधान ) यस्य तस्मिन् [illegible]

[1]कर्णविषेण च भग्नः किं किं न करोति बालिशो लोकः ।
क्ष[2]पणकतामपि धत्ते पिबति सुरां न[3]रकपालेन ॥ ४४ ॥

पा[4]दाहतोऽपि दृढदण्डस[5]माहतोऽपि
यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः ।
कोऽप्येष एव पिशुनोग्र[6]मनुष्यधर्मः
कर्णे परं स्पृशति हन्ति परं समूलम् ॥ ४५ ॥

गुरोरप्यवलिप्तस्य कार्या[7]कार्यमजानतः ।
उत्[8]पथप्रतिपन्नस्य परित्यागो विधीय[9]ते ॥ ४६ ॥

न तान् सुतीर्थैस्तपसा च लोकान्
स्[10]वर्गैषिणो दानशतैः सुवित्तैः ।
क्षणेन यान् यान्ति रणेषु धीराः
प्राणान् समुज्झन्ति हि ये सुशीलाः ॥ ४७ ॥

त्याज्यं न धैर्यं विधुरेऽपि काले
धैर्यात् कदाचिद् गतिमाप्नुयात् सः ।
यथा समुद्रेऽपि च पोतभङ्गे
सांयात्रिको वाञ्छति त[11]र्तुमेव ॥ ४८ ॥

---

१ कर्णस्य विषेण—कानाच्या विषानें, कानांत ( निंदारूपी ) विष ओतल्यानें. २ क्षपणकतां धत्ते—संन्यासीपण धारण करितो, संन्यासी बनतो. ३ नरस्य कपालेन—मनुष्याच्या डोक्याच्या करटींतून. ४ पादेन आहतः अपि—पायानें लाथाडलें असतांना सुद्धां. ५ दृढेन ( मजबूत ) दण्डेन ( काठीनें ) समाहतः अपि । तृ० त. ६ पिशुनः ( चहाडखोर, निंदक ) एव उग्रः ( भयंकर ) मनुष्यः । कर्म०. °मनुष्यस्य धर्मः । ष. त. ७ कार्यम् ( करणें योग्य कोणतें ) अकार्यं ( अयोग्य कोणतें ) च अजानतः ( न जानाति इति तस्य ) । ८ उत्क्रान्तः पन्थानम्—**उत्पथः** ( वाईट मार्ग ) । तं प्रतिपन्नस्य ( गेलेल्या, जाणाऱ्या ) । ९ **विधीयते**—वि+धा ( ३ उ. ) या धातूचें कर्मणि वर्त० तृ. पु. चें एक व०. ‘( धर्मग्रंथांत ) सांगितला आहे’. १० स्वर्गैषिणः—स्वर्गाची इच्छा करणारे. ११ तर्तुम्—**तरितुम् । तरीतुम् ।**

पुंसामसमर्थानामुपद्रवायात्मनो भवेत् कोपः।
पिठरं क्वथदतिमात्रं निजपार्श्वानेव दहतितराम् ॥ ४९ ॥

यस्यास्ति सर्वत्र गतिः स कस्मात्
स्वदेशरागेण हि याति नाशम्।
तातस्य कूपोऽयमिति ब्रुवाणाः
क्षारं जलं कापुरुषाः पिबन्ति ॥ ५० ॥

बहूनामप्यसाराणां समवायो हि दुर्जयः।
तृणैरावेष्ट्यते रज्जुर्यया नागोऽपि बध्यते ॥ ५१ ॥

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखीभवति ॥ ५२ ॥

एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम्।
गतानुगतिको लोको न लोकः पारमार्थिकः ॥ ५३ ॥

प्रजापीडनसंतापात् समुद्भूतो हुताशनः।
राज्ञः श्रियं कुलं प्राणान् नादग्ध्वा विनिवर्तते ॥ ५४ ॥

पराङ्मुखेऽपि दैवेऽत्र कृत्यं कार्यं विपश्चिता।
आत्मदोषविनाशाय स्वचित्तस्तम्भनाय च ॥ ५५ ॥

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्
दैवं हि दैवमिति कापुरुषा वदन्ति।

---

१ **पुंसाम्** ( =नराणाम् )—'पुमन्' चें षष्ठीचें बहु० व. **उपद्रवाय भवेत्**— उपद्रवाला कारणीभूत होतो. २ दहतितराम्—भृशं दहति । ३ **ब्रुवाणाः**—ब्रू ( २ आ. ) या धातूचें वर्त० धातु० विशे० पुं. प्र. चें बहु० व. 'बोलणारे' ४ **आवेष्ट्यते**—आ+वेष्ट् ( १० प. ) या धातूचें कर्मणि वर्त० तृ. पु. चें एक व. '( गवताची ) तयार केली जाते'. ५ निरन्तरं ( अभिन्न, एकरूप ) चित्तं यस्य तस्मिन्। बहु०. ६ गतानाम् अनुगतिकः।—लोक अन्धानुकरण करणारे असतात, सत्यप्रिय नसतात. ७ कृत्यं कार्यम्—कर्तव्य करावें. ८ **उपैति**—( उप + इ २ प. )— जवळ जाते, आश्रय करिते.

दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ५६ ॥
घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम् ।
पातयितुमेव शक्तिर्नाखोरुद्धर्तुमन्नपिटम् ॥ ५७ ॥
दद्यात् साधुर्यदि निजपदे दुर्जनाय प्रवेशं
तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः ।
तस्माद् देयो विपुलमतिभिर्नावकाशोऽधमानां
जारोऽपि स्याद् गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥ ५८ ॥
साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः ।
पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन ॥ ५९ ॥
प्रायेणात्र कुलान्वितं कुकुलजाः श्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजूनऋजवो वित्तान्वितं निर्धनाः ।
वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो
नानाशास्त्रविचक्षणं च पुरुषं निन्दन्ति मूर्खा जनाः ॥ ६० ॥

—पञ्चतन्त्रम् १

* * *

कस्यापि कोऽप्यतिशयोऽस्ति स तेन लोके
ख्यातिं प्रयाति न हि सर्वविदस्तु सर्वे ।
किं केतकी फलति किं पनसः सपुष्पः
किं नागवल्ल्यपि च पुष्पफलैरुपेता ॥ ६१ ॥

---

१ **घातयितुम्**—हन् ( २ प. ) या धातूच्या प्रयोजकाचें तुमन्त अव्यय. 'नाश करण्याकरितां'. २ आखोः अन्नपिटं पातयितुम् एव शक्तिः, तद् उद्धर्तुं न। आखुः ( पु. )—उंदीर. ३ विपुला ( विशाल ) मतिः येषां तैः। ४ अधमानाम् अवकाशः (शिरकाव) न देयः (देऊं नये)। ५ **वाक्यतः**—लोकोक्तीवरून. ६ **विनियोज्यः**—वि+नि+युज् ( ७ उ. ) या धातूचें कर्मणि विध्यर्थी धातु० विशे०, पुं. प्र. चें एक व०. ७ श्रियः वल्लभम् ( आवडता, प्रिय )। ८ वैरूप्येण ( कुरूपतेनें ) उपहताः ( पीडलेले )। कुरूप लोक. ९ कान्तं ( रमणीय, सुंदर ) वपुः ( शरीर ) यस्य तम्। बहु०. १० नाना ( विविध ) शास्त्रेषु विचक्षणम् ( हुषार, निष्णात )।

वासः[1] प्रधानं खलु योग्यताया वासोविहीनं विजहाति लक्ष्मीः ।
पीताम्बरं[2] वीक्ष्य ददौ तनूजां[3] दिगम्बरं[4] वीक्ष्य विषं समुद्रः ॥६२॥

आपद्गतं[5] हससि किं द्रविणान्ध मूढ
लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् ।
एतान् प्रपश्यसि घटाञ्जलयन्त्रचक्रे[6]
रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥ ६३ ॥

पीतः[7] क्रुद्धेन तातश्चरणतलहतो[8] वल्लभोऽन्येन[9] रोषा-
दाबाल्याद्[10] विप्रवर्यैः स्ववदनविवरे धार्यते वैरिणी मे ।
गेहं मे छेदयन्ति प्रतिदिवसमुमाकान्तपूजानिमित्तं[11]
तस्मात् खिन्ना सदाहं द्विजकुलनिलयं नाथ नित्यं त्यजामि ॥६४॥

प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः
स च सकलकलाभिः पूर्णचन्द्रो न वन्द्यः ।
अतिपरिचयदोषात् कस्य नो मानहानिर्
नवनवगुणरागी[12] प्रायशः सर्वलोकः ॥ ६५ ॥

किमपेक्ष्य[13] फलं पयोधरान् ध्वनतः[14] प्रार्थयते मृगाधिपः[15] ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥ ६६ ॥

पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्
रामेणापि कथं न हेमहरिणस्यासंभवो लक्षितः ।

---

१ **वासः**—वासस् ( न. ), कपडे, पोषाख. २ पीतम् अम्बरं ( वासः ) यस्य तम् ( विष्णुम् ) । बहु०. ३ **तनूजाम्** = आत्मजाम्, कन्याम्. ४ दिशः एव अम्बरं यस्य तम् ( शिवम् ) । बहु०. ५ आपदम् गतम्—संकटांत सांपडलेल्याला. ६ जलस्य यन्त्रचक्रे—पाण्याच्या रहाटावर. ७ **पीतः** ( पा १ प.—पिबति )—( क्रुद्ध अगस्ति ऋषीनें ) पिऊन टाकला. ८ तातः—बाप, वडील ( समुद्र ). ९ वल्लभः—प्रिय, पति ( विष्णु ). अन्येन ( द्विजेन )—दुसऱ्या ब्राह्मणानें ( भृगु ऋषींनीं ). १० आ बाल्यात्—लहानपणापासून. ११ उमायाः कान्तस्य ( शंकरस्य ) पूजानिमित्तम् । १२ नवानां नवानां गुणानां रागी—नवे नवे गुण आवडणारा. १३ किं फलम् अपेक्ष्य—कोणत्या फलाची अपेक्षा करून. १४ **ध्वनतः**—ध्वन् ( १ प. ) या धातूचें वर्त० धातु० विशे०, पुं. द्वि० चें बहु०. 'गर्जना करणाऱ्या'. १५ मृगाणाम् अधिपः ( राजा )—सिंहः ।

अक्षैश्चापि युधिष्ठिरेण रमता[1] ज्ञातो न दोषः कथं
प्रत्यासन्न[2]विपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ ६७ ॥

चातकस्य मुखचञ्चुसंपुटे नो पतन्ति यदि वारिबिन्दवः ।
सागरीकृत[3]महीतलस्य किं दोष एव जलदस्य दीयते ॥ ६८ ॥

यान्ति न्यायप्रवृत्तस्य[4] तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि[5] विमुञ्चति ॥ ६९ ॥

उदयति यदि भानुः पश्चिमे दिग्विभागे
विकसति यदि पद्मं पर्वतानां शिखाग्रे[6] ।
प्रचलति यदि मेरुः शीततां याति वह्निर्
न चलति खलु वाक्यं सज्जनानां कदाचित् ॥ ७० ॥

स हि गगनविहारी[7] कल्मषध्वंसकारी
दशशतकरधारी[8] ज्योतिषां मध्यचारी[9] ।
विधुरपि विधियोगाद् ग्रस्यते राहुणासौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ॥ ७१ ॥

गुणवदगुणवद्[10] वा कुर्वता कार्यमादौ
परिणतिरवधार्या[11] यत्नतः पण्डितेन ।

---

१ रमता = **रममाणेन** । २ प्रत्यासन्नया (अगदीं जवळ आलेल्या) विपत्त्या (संकटानें) मूढं मनः येषां तेषाम् । बहु०. ३ सागरीकृतं महीतलं येन तस्य । बहु०.—ज्यानें पृथ्वीचा सागर करून टाकला, पृथ्वीवर पाणीच पाणी केलें. **सागरीकृतम्**—'सागर' पासून 'सागरीकृ' हा च्वि धातु, कर्म० भू० धातु विशे०. ४ न्यायेन प्रवृत्तस्य—न्यायानें (प्रामाणिकपणानें) कोणतीहि गोष्ट करणाराला. सहायतां यान्ति = मदत करतात. ५ **समानम् उदरं यस्य सः—सोदरः** । 'सख्खा भाऊ'. ६ शिखायाः (= शिखरस्य) अग्रे । ष. त. ७ गगने (= आकाशे) विहरति (चरति) इति । ८ दशशतं (= सहस्रं) करान् धारयति इति । —सहस्ररश्मि, चंद्र. ९ मध्ये चरति इति । (तार्‍यांच्या) मध्यें फिरणारा. १० गुणवत्—चांगलें; अगुणवत्—वाईट. ११ **अवधार्या**—अव + धृ (१० उ.) या धातूचें विध्यर्थी कर्मणि धातु० विशे०, स्त्री. प्र. चें एक व०. (परिणाम) लक्षांत ध्यावा, (परिणामाचा) विचार करावा.

अतिरभस[1]कृतानां कर्मणामा[2]विपत्तेर्
भवति हृदय[3]दाही शल्य[4]तुल्यो विपाकः ॥ ७२ ॥

गाङ्गमम्बु सितमम्बु यामुनं कज्जला[5]भमुभयत्र मज्जतः[6] ।
राजहंस तव सैव शुभ्रता चीयते न च न चा[7]पचीयते ॥७३॥

दोषाकरो[8]ऽपि कुटिलोऽपि कलङ्कितोऽपि
मित्रा[9]वसानसमये विहितो[10]दयोऽपि ।
चन्द्रस्तथापि हरवल्लभता[11]मुपैति
नैवाश्रितेषु महतां गुणदोष[12]शङ्का ॥ ७४ ॥

धवलयति[13] समग्रं चन्द्रमा जीवलोकं[14]
किमिति निजकलङ्कं[15] नात्म[16]संस्थं प्रमार्ष्टि[17] ।
भवति विदितमेतत् प्रायशः सज्जनानां
परहित[18]निरतानामादरो नात्मकार्ये[19] ॥ ७५ ॥

---

१ अतिरभसेन (अत्यंत अविचारानें) कृतानाम्। तृ. त. २ आ विपत्तेः—नाश होईपर्यंत, आमरण. ३ हृदयं दहति इति। उप. त. ४ शल्येन (बाण, कांटा) तुल्यः (सारखा)। तृ. त. ५ कज्जलस्य (काजळ) आभा (रंग, सादृश्य) इव आभा यस्य तत्। बहु०. (यमुनेचें पाणी) काजळासारखें काळें. ६ **मज्जतः**—मस्ज् (६ प.—मज्जति) या धातूचें वर्त० धातु० विशे०, पुं. ष. चें. एक व०. 'बुडी मारणाऱ्या, आंघोळ करणाऱ्या (तुझी)'. ७ न अपचीयते—कमी होत नाहीं. चीयते = वाढते. ८ **दोषाकरः**—दोषाणाम् आकरः (खाण, समुच्चय)। दोषां (= निशां) करोति इति।—निशाकर, 'चंद्र'. ९ मित्रस्य (सुहृदः, सूर्यस्य) अवसानस्य (नाशस्य, अस्तस्य) समये (काले)। १० विहितः (झालेला आहे) उदयः (उदय, भरभराट) यस्य सः। बहु०. ११ हरस्य वल्लभताम् उपैति—शंकराचा आवडता होतो. १२ गुणानां दोषाणां च शङ्का। १३ **धवलयति**—'धवल' या शब्दापासून झालेल्या नामधातूचें वर्त० तृ. पु. चें एक व०. स्वच्छ करतो, शुभ्र करतो. १४ जीवानां लोकम् = मृत्युलोकम्, जगत्। १५ निजस्य (आत्मनः) कलङ्कम् (डाग)। १६ आत्मनि (स्वतःच्या ठिकाणीं) संस्थम् (राहाणारा, असलेला)। १७ **प्रमार्ष्टि**—प्र+मृज् (२ प.—पुसून टाकणें) या धातूचें वर्त० तृ० पु० चें एक व०. १८ परेषां हिते निरतानाम् (गढून गेलेले, तत्पर)। १९ आत्मनः (स्वतःच्या) कार्ये आदरः न (भवति)।

# संस्कृत उताऱ्यांतील विशेष शब्दकोश

### अ

**अऋजु** (वि.)* लवाड, अप्रामाणिक

**अक्षः** (पु.) फांसा

**अक्षोभ्य** ( वि. ) न खवळणारा

**अगम्य** ( वि. ) दुर्गम, जवळ जाण्यास कठीण ; गहन

**अङ्कः** ( पु. ) मांडी

**अङ्कित** ( वि. ) चिह्नित, खूण असलेला

**अङ्गुलीयकम्** ( न. ) आंगठी

**अचकित** ( वि. ) न भ्यालेला

**अचिरेण** ( अ. ) लवकरच

**अटवी** ( स्त्री. ) अरण्य

**अतिक्रान्त** ( वि. ) होऊन गेलेला, निघून गेलेला, नष्ट

**अतिदुरन्त** ( वि. ) अत्यंत दुष्परिणामी

**अतिपातः** ( पु. ) निघून जाणें; उल्लंघन; नाश; घडणें

**अतिमात्रम्** ( अ. ) फार, अतिशय

**अतिलोल** ( वि. ) अतिशय कोमल, फार नाजूक

**अतिशयः** ( पु. ) आधिक्य, विपुलता

**अतुल** ( वि. ) अप्रतिम

**अत्यासङ्गः** ( पु. ) अतिशय आसक्ति, मोठा कर्तृत्वाभिमान

**अत्रान्तरे** ( अ. ) मध्यंतरीं, दरम्यान

**अधिगत** ( वि. ) मिळालेला, प्राप्त

**अधिदैवतम्** ( न. ) श्रेष्ठ देवता, रक्षण करणारा देव, ईश्वर

**अधिष्ठानम्** ( न. ) ठिकाण, आधार; वसतिस्थान

**अधिष्ठानता** ( स्त्री. ) आधारभूत असणें

**अधीत** ( अधि+इ २ प. –कर्मणि भूत. वि. ) अध्ययन केलेला, शिकलेला

**अनन्तरम्** (अ.) नंतर, मागाहून, लगेच

**अनयः** ( पु. ) अन्याय, दुर्वर्तन ; कपट

**अनर्थः** ( पु. ) संकट, भय

**अनवसित** ( वि. अन्+अवसित— अव+सो. ४ प. ) न संपलेला

**अनवेक्षणम्** ( न. ) देखरेख न ठेवणें, बेफिकीरपणा, दुर्लक्ष

**अनागस्** ( वि. ) निष्पाप, निरपराधी

**अनाथः** (पु.)पोरका,दुबळा, गरीब मनुष्य

**अनार्य** ( वि. ) आर्य नाहीं तो, शूद्र; असभ्य, हलकट

**अनिष्ठुर** ( वि. ) क्रूर नसलेला, दयाळू

**अनुक्त** ( वि. अन्+उक्त–वच् २ प. ) न बोललेला

**अनुग्राह्य** ( वि. ) कृपापात्र, आश्रय किंवा मदत करण्याला योग्य

---

* **पु.** = पुंलिङ्गी नाम; **स्त्री.** = स्त्रीलिङ्गी नाम ; **न.** = नपुंसकलिङ्गी नाम ; **वि.** = विशेषण ; **अ.** = अव्यय ; आंकडे गणाचे ; **प.** = परस्मैपद ; **आ** = आत्मनेपद ; **उ.** उभयपद

**अनुचरः** ( पुं. ) सोबती, सेवक
**अनुचित** ( वि. ) अयोग्य
**अनुज्झित** ( वि. अन् + उज्झित ) न टाकलेला, न सोडलेला
**अनु+नी** ( १ प. अनुनयति ) मन वळवणें, सांत्वन करणें
**अनुपचर्य** ( वि. ) खुशामतीची अपेक्षा न करणारा, नि:स्वार्थी
**अनुबन्धः** ( पु. ) पाठलाग ; प्रयोजन, परिणाम ; आरंभ
**अनु+रञ्ज्**(१,४ उ.) प्रेम करणें, आसक्त होणें ; संतुष्ट होणें
**अनुरागवत्** ( वि. ) प्रेम असलेला, प्रेमी
**अनुरोधः** ( पु. ) अनुसरणें ; मर्जी सांभाळणें ; आदर ; धोरण, रोख
**अनुवर्तिन्** ( वि. ) आज्ञाधारक, वश
**अनूचित** ( वि. ) अपरिचित
**अन्तरा** ( अ. ) मध्यें ; शिवाय
**अन्तरे** ( अ. ) आंत, मध्यें
**अन्तरालम्** ( न. ) मधली जागा, मध्यभाग ; मधला वेळ
**अन्तःपुरम्** ( न. ) } स्त्रियांची जागा ;
**अन्तःपुरिका** (स्त्री.) } स्त्रिया
**अन्नपिटः** ( पु. ) अन्नाचें भांडें, टोपली, अन्नाची करंडी
**अन्यतस्** ( अ. ) दुसरीकडे ; दुसऱ्या कारणास्तव ; दुसऱ्यापासून
**अन्यदा** ( अ. ) दुसऱ्या वेळीं
**अन्येद्युः** ( अ. ) दुसऱ्या दिवशीं
**अन्वित** ( वि. अनु+इत ) युक्त, सहित
**अपकर्षणम्** ( न. ) मागें टाकणें, खंडन
**अपकारः** ( पु. ) दुखापत, इजा; दोष
**अपकृत्** ( पु. ) अपकार करणारा
**अपकृतम्** ( न. ) नुकसान, इजा
**अपगमः**(पु.) नाहींसा होणें, अभाव, नाश
**अपरीक्षित** ( वि. ) परीक्षा न घेतलेला; अविचाराचा, मूर्खपणाचा
**अप+सृ** ( १ प. ) दूर निघून जाणें
**अप+हृ**(१प.) दूर नेणें, घेऊन जाणें; चोरणें
**अपायः** ( पु. ) नाश, शेवट ; संकट
**अप्रणयः** ( पु. ) प्रेमाचा अभाव
**अप्रतिहत** (वि.) न जिंकलेला, अजिंक्य, अप्रतिबंध, निर्विघ्न
**अप्रमादिन्** (वि.) काळजी घेणारा, दक्ष
**अफल** ( वि. ) निष्फळ, निरुपयोगी
**अभाजनम्** ( न. ) अयोग्य स्थान
**अभिजनः** (पु.) चांगल्या कुळांत जन्म, चांगलें कुळ
**अभितः** ( अ. ) सभोंवार, सर्व बाजूंना
**अभि+द्रु** (१ प.) कडे जाण, हल्ला करणें
**अभि+पत्** (१ प.) जवळ जाणें, गांठणें
**अभि+प्र+स्था** (१आ.) जाऊं लागणें, निघणें.
**अभिप्रायः** ( पु. ) हेतु, इच्छा
**अभिप्रेत** ( वि. अभि+प्र+इत ) प्रिय, आवडता
**अभिभूत** ( वि. ) ग्रासलेला
**अभियुक्त** ( वि. ) निष्णात, तज्ज्ञ, विद्वान, शहाणा
**अभिवादनम्** ( न. ) वंदन, नमस्कार
**अभीष्ट** (वि.) इच्छिलेला ; लाडका, प्रिय
**अभ्युदयः** ( पु. ) उत्सव, आरंभ
**अमोघ** ( वि. ) न चुकणारा, अचूक

**अम्बु** ( न. ) पाणी
**अम्भस्** ( न. ) पाणी
**अम्मो** ( अ. ) ओहो ! ( आश्चर्यार्थी )
**अरकः** ( पु. ) चाकाची आर
**अर्थः** ( पु. ) द्रव्य, संपत्ति ; (शब्दांचा) अर्थ ; हेतु, मतलब
**अर्थिन्** ( पु. ) याचक, भिकारी
**अर्दित** ( वि. ) त्रासलेला, पीडित
**अर्वाच्** ( अ. ) अलीकडे, आंत, जवळ
**अलक्षित** ( वि. ) न पाहिलेला
**अलीकम्** ( न. ) असत्य, खोटें
**अव+गम्** ( १ प. ) जाणणें, समजणें
**अवदात** (वि.) निर्मळ, शुद्ध ; उज्ज्वल
**अवनीरुहः** ( पु. ) वृक्ष, झाड
**अवलम्बनम्** ( न. ) आधार, मदत
**अवलिप्त** ( वि. ) माखलेला ; दोषयुक्त ; गर्विष्ठ
**अविकत्थन** ( वि. ) बढाई न मारणारा, सालस, नम्र
**अवृष्टिः** ( स्त्री. ) अवर्षण, दुष्काळ
**अशनम्** ( न. ) खाणें, अन्न
**अशोच्य** ( वि. ) शोक करणें योग्य नाहीं असा
**असदृश** ( वि. ) अयोग्य
**असाधुः** ( पु. ) दुर्जन, दुष्ट मनुष्य
**असाम्प्रत** ( वि. ) अयोग्य
**असारः** ( पु. ) निरुपयोगी वस्तु, क्षुद्र वस्तु
**असुः** ( पु. ब. व. ) प्राण
**असुखम्** ( न. ) दुःख
**अस्मदीय** ( वि. ) आमचा
**अहिः** ( पु. ) साप ; दुष्ट मनुष्य, ठक

## आ

**आ+कल्** ( १० प. ) मानणें, समजणें ; लक्षांत घेणें
**आ+क्रम्** (१,४ प.) वर चढणें; शिरणें, काबीज करणें ; हल्ला करणें
**आक्रान्त** ( वि. आ+क्रम् ) पीडलेला ; व्यापलेला, वसति केलेला
**आखुः** ( पु. ) उंदीर
**आगन्तुकः** ( पु. ) पाहुणा
**आ+चक्ष्** ( २ आ. ) बोलणें, सांगणें
**आतिथेय** ( वि. ) पाहुण्याला योग्य, पाहुणचारालायक
**आत्मजः** ( पु. ) मुलगा
**आदर्शः** ( पु. ) आरसा ; कित्ता ; नमुना
**आ+दिश्** (६ प.) आज्ञा करणें ; शिकवणें
**आ+दृ** ( ६ आ.–आद्रियते ) मान देणें ; लक्ष देणें, झटणें
**आदौ** ( अ. ) प्रथम, आरंभीं
**आ+धा** ( ३ उ. ) ठेवणें
**आ+पत्** ( १ प. ) ( मनाला ) वाटणें, दिसणें; धावून येणें; मनांत येणें; घडणें
**आभरणम्** ( न. ) भूषण, अलंकार
**आभोगः** (पु.) नागाची फणा ; शरीर ; घेर, विस्तार
**आम्लम्** ( न. ) आंबटपणा
**आयतनम्** ( न. ) स्थान, ठिकाण
**आयासः** ( पु. ) श्रम, कष्ट ; थकवा, दुःख
**आलापः** ( पु. ) भाषण, शब्द
**आशु** ( अ. ) लवकर
**आस्थानम्** ( न. ) सभा ; आदर
**आस्पदम्** ( न. ) जागा, आश्रयस्थान

